# पञ्चमुखिहनुमत्कवचम्

श्रीचिन्तामणिरामभद्रे सुदर्शनसंहिता अन्तर्गत

अस्य श्रीपञ्चमुखिहनुमत्कवचस्तोत्रमन्त्रस्य, ब्रह्मा ऋषिः ।

गायत्री छन्दः । श्रीहनुमान् देवता । रां बीजम् । मं शक्तिः ।

चन्द्रः कीलकम् ।

ॐ रौं कवचाय हुम् । हौं अस्त्राय फट् ।

ॐ हरिमर्कटमर्कटाय स्वाहा

ॐ नमो भगवते पञ्चवदनाय पूर्वकपिमुखाय

सकलशत्रुसंहरणाय स्वाहा ।

ॐ नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय नरसिंहाय

सकलभूतप्रमथनाय स्वाहा ।

ॐ नमो भगवते पञ्चवदनाय पश्चिममुखाय गरुडाननाय

सकलविषहराय स्वाहा ।

ॐ नमो भगवते पञ्चवदनाय उत्तरमुखाय आदिवराहाय

सकलसम्पत्कराय स्वाहा ।

ॐ नमो भगवते पञ्चवदनाय ऊर्ध्वमुखाय

हयग्रीवाय सकलजनवशकराय स्वाहा ।

न्यासाः-

अस्य श्रीपञ्चमुखिहनुमत्कवचस्तोत्रस्य श्रीरामचन्द्र ऋषिः ।

अनुष्टुप्छन्दः । श्रीरामचन्द्रो देवता । सीता इति बीजम् ।

हनुमानिति शक्तिः । हनुमत्प्रीत्यर्थे जपे विनियोगः ।

पुनर्हनुमानिति बीजम् । ॐ वायुपुत्राय इति शक्तिः ।

अञ्जनीसुतायेति कीलकम् ।

श्रीरामचन्द्रवरप्रसादसिद्ध्यर्थे जपे विनियोगः ।

ॐ अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः ।

ॐ रुद्रमूर्तये तर्जनीभ्यां नमः ।

ॐ वायुपुत्राय मध्यमाभ्यां नमः ।

ॐ अग्निगर्भाय अनामिकाभ्यां नमः ।

ॐ रामदूताय कनिष्ठिकाभ्यां नमः ।

ॐ सीताशोकनिवारणाय करतलकरपृष्ठाभ्यां नमः ।

ॐ अञ्जनीसुताय हृदयाय नमः ।

ॐ रुद्रमूर्तये शिरसे स्वाहा ।

ॐ वायुपुत्राय शिखायै वषट् ।

ॐ अग्निगर्भाय कवचाय हुम् ।

ॐ रामदूताय नेत्रत्रयाय वौषट् ।

ॐ पञ्चमुखिहनुमते अस्त्राय फट् ।

ॐ पञ्चमुखिहनुमते स्वाहा इति दिग्बन्धः ।

ध्यानं-

वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं

दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा ।

हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशाद्रिं हलं

खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिवीरापहम् ॥

श्रीरामदूताय आञ्जनेयाय वायुपुत्राय महाबलाय

सीताशोकनिवारणाय, महाबलप्रचण्डाय, लङ्कापुरीदहनाय,

फाल्गुनसखाय कोलाहलसकलब्रह्माण्डविश्वरूपाय,

सप्तसमुद्रान्तराललङ्घिताय, पिङ्गलनयनायामितविक्रमाय,

सूर्यबिम्बफलसेवाधिष्ठितपराक्रमाय,

सञ्जीवन्या अङ्गदलक्ष्मणमहाकपिसैन्यप्राणदात्रे

दशग्रीवविध्वंसनाय, रामेष्टाय, सीतासहितरामचन्द्रवरप्रसादाय ।

षट्प्रयोगागमपञ्चमुखिहनुमन्मन्त्रजपे विनियोगः ।

ॐ हरिमर्कटमर्कटाय स्वाहा ।

ॐ हरिमर्कटमर्कटाय, वं, वं, वं, वं वं वौषट् स्वाहा ।

ॐ हरिमर्कटमर्कटाय फं, फं, फं, फं, फं, फट् स्वाहा ।

ॐ हरिमर्कटमर्कटाय खं, खं, खं, खं, खं, मारणाय स्वाहा ।

ॐ हरिमर्कटमर्कटाय ठं, ठं, ठं, ठं, ठं, स्तम्भनाय स्वाहा ।

ॐ हरिमर्कटमर्कटाय डं, डं, डं, डं, डं

आकर्षणाय सकलसम्पत्कराय

पञ्चमुखिवीरहनुमते स्वाहा ।

उच्चाटने

ॐ ढं, ढं, ढं, ढं, ढं, कूर्ममूर्तये पञ्चमुखिहनुमते

परयन्त्रतन्त्रोच्चाटनाय स्वाहा ।

कं, खं, गं, घं, ङं, चं, छं, जं,

झं, ञं, टं, ठं, डं, ढं, णं,

तं, थं, दं, धं, नं, पं, फं,

बं, भं, मं, यं, रं, लं, वं,

शं, षं, सं, हं, क्षं, स्वाहा इति दिग्बन्धः ।

ॐ पूर्वकपिमुखाय पञ्चमुखिहनुमते ठं, ठं, ठं, ठं, ठं,

सकलशत्रुसंहरणाय स्वाहा ।

ॐ दक्षिणमुखाय पञ्चमुखिहनुमते करालवदनाय नरसिंहाय

ह्रां, ह्रां, ह्रां, ह्रां, ह्रां सकलभूतप्रेतदमनाय स्वाहा ।

ॐ पश्चिममुखाय गरुडासनाय पञ्चमुखिवीरहनुमते

मं, मं, मं, मं, मं, सकलविषहराय स्वाहा ।

ॐ उत्तरमुखे आदिवराहाय लं, लं, लं, लं, लं नृसिंहाय

नीलकण्ठाय पञ्चमुखिहनुमते स्वाहा ।

ॐ अञ्जनीसुताय वायुपुत्राय, महाबलाय, रामेष्टफाल्गुनसखाय

सीताशोकनिवारणाय, लक्ष्मणप्राणरक्षकाय, कपिसैन्यप्रकाशाय,

दशग्रीवाभिमानदहनाय, श्रीरामचन्द्रवरप्रसादकाय, महावीर्याय,

प्रथमब्रह्माण्डनायकाय, पञ्चमुखिहनुमते,

भूत-प्रेतपिशाच-ब्रह्मराक्षस-शाकिनी-डाकिनी-

अन्तरिक्ष-गृह-परयन्त्र-परतन्त्र-सर्वग्रहोच्चाटनाय,

सकलशत्रुसंहरणाय, पञ्चमुखिहनुमद्वरप्रसादाय, सर्वरक्षकाय

जं, जं, जं, जं, स्वाहा ।

पठित्वेदं तु कवचं महान्तं कवचं पठेत् ।
एकवारं पठेन्नित्यं सर्वशत्रुनिवारणम् ॥ १॥

द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्द्धनम् ।
त्रिवारं पठते नित्यं सर्वसम्पत्करं परम् ॥ २॥

चतुर्वारं पठेन्नित्यं सर्वमर्त्यवशङ्करम् ।
पञ्चवारं पठेन्नित्यं सर्वरोगनिवारणम् ॥ ३॥

षड्वारं तु पठेन्नित्यं सर्वदेववशीकरम् ।
सप्तवारं पठेन्नित्यं सर्वकामार्थसिद्धिदम् ॥

अष्टवारं पठेन्नित्यं सर्वसौभाग्यदायकम् ।
नववारं पठेन्नित्यं सर्वैश्वर्यप्रदायकम् ॥ ५॥

दशवारं पठेन्नित्यं त्रैलोक्यज्ञानदर्शनम् ।
एकादशं पठेन्नित्यं सर्वसिद्धिं लभेन्नरः ॥ ६॥

कवचं स्मृतिमात्रेण महालक्ष्मीफलप्रदम् ।

तस्माच्च प्रयता भाव्यं कार्यं हनुमतः प्रियम् ॥ ७॥

इति श्रीचिन्तामणिरामभद्रे सुदर्शनसंहितायां